

# शेमुषी

# SEMUSHI

University News Letter — October to December - 2021

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥

## राष्ट्रियसंस्कृतविश्वविद्यालयस्य प्रथमः दीक्षान्तसमारोहः




राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः
NATIONAL SANSKRIT UNIVERSITY , TIRUPATI
A Central University established by an act of Parliament
(Formerly Rashtriya sanskrit Vidyapeetha, Deemed to be University)
Tirupati- 517507

# डा. बि.आर्. अम्बेडकरवर्धन्तीकार्यक्रमः



**दिनाङ्कः - ०६.१२.२०२१**

राष्ट्रियसंस्कृतविश्वविद्यालयद्वारा ०६.१२.२०२१ दिनाङ्के भारतस्य संविधानशिल्पिनः महामहिमशालिनः गौरवभूतस्य श्रीमतः डा. बि.आर्. अम्बेडकरमहोदयस्य वर्धन्तीकार्यक्रमः आचार्यरमारञ्जनमुखर्जिसभागृहे महता वैभवेन समायोज्यत। कार्यक्रमेऽस्मिन् विश्वविद्यालयस्य मान्याः कुलपतयः आचार्याः वि. मुरलीधरशर्ममहोदयाः मुख्यातिथिपदं व्यभूषयन् । अस्मिन् सन्दर्भे कुलसचिवाः कमाण्डर् चल्ला वेङ्कटेश्वरमहोदयाः शैक्षणिकसंकायप्रमुखाः आचार्याः राणिसदाशिवमूर्तिमोदयाः परीक्षानियन्त्रकाः आचार्याः साम्बशिवमूर्तिमहोदयाः शिक्षाशास्त्रविभागाध्यक्षाः आचार्याः वेङ्कटरावमहोदयाश्च उपस्थिता आसन् । डा. चन्दुलालमहोदयाः कार्यक्रमस्य संचालनमकुर्वन् ।





# कर्मचारिणाम् उद्योगस्थिरीकरणम्



राष्ट्रियसंस्कृतविद्यापीठे २०१९ तमे संवत्सरे सप्टेम्बरमासे ततः परं च नियुक्तानां चत्वारिंशतः (४०) अधिकानां शिक्षकशिक्षकसहयोगिनां कर्मचारिणामुद्योगस्थिरीकरणं प्रशासनेनाकारि । समेभ्यः स्थायित्वं प्राप्तवद्भ्यः कर्मचारिभ्यः शेमुषीपरिवारपक्षतः हार्दाः शुभाशयाः ।

## कुलपतीनां वाणीतः ...



सम्प्रति देशे सर्वत्र शिक्षणसंस्थासु नवीनराष्ट्रियशिक्षानीतेः कार्यान्वयनचिन्तनं वेगेन चलति । अग्रिमकाले अनिवार्यतया अस्याः प्रायोगिकरूपेण शिक्षणव्यवस्थायाम् आनयनप्रयासः सर्वकारेण विश्वविद्यालयानुसन्धानायोगेनचवेगेनक्रियमाणःअस्ति।भारतीयज्ञानपरम्परायाः अनुपालने कार्यान्वयने च सर्वासां शिक्षणसंस्थानाम् अग्रगामित्वमनिवार्यम् । परस्परं विश्वविद्यालयाः नवीनशिक्षानीतेः समन्वयतया प्रयोगे सोत्साहं भागं गृह्णीयुः । अधुना अस्याः अननुप्रयोगे कोऽपि विकल्पः न अवशिष्टः । अतः शिक्षानीतौ उक्तप्रकारेण राष्ट्रियसंस्कृतविश्वविद्यालये अभ्यासक्रमाणां रचना कृता वर्तते । अपि च विविधविश्वविद्यालयैस्सह शैक्षणिकसामञ्जस्यस्थापने अयं विश्वविद्यालयः कटिबद्धः अग्रेसरश्च वर्तते ।

भारते भारतीयशिक्षाव्यवस्थायाः आगमनेनैव भारतीयत्वं प्रपञ्चपरिचायकं भवति । अस्यां शिक्षानीतौ प्राथमिकस्तरात् आरभ्य उच्चशिक्षापर्यन्ता व्यवस्था न्यरूप्यत । अस्याः अनुसारं पाठ्यक्रमादिनिर्माणाय मुक्तः व्यापकश्च अवसरः प्रदत्तो वर्तते । भारतीयविभिन्नविषयाणाम् अभ्यासाय अवसरः । एकेन अभ्यासक्रमेण सह अन्याभ्यासक्रमपठनस्य सौकर्यम् । Interdisciplinary, Multidisciplinary इति शब्दयोः महत्त्वम् आधिक्येन दत्तमस्ति अस्यां नीतौ । प्राचीनशास्त्राणां मातृकादीनां चाध्ययने संस्कृतक्षेत्रे व्यापकः अवसरः वर्तते । संस्कृतवाङ्मयस्य विकासाय सर्वैः सम्भूय कार्यं कर्तव्यम् । येन सर्वेषां विश्वविद्यालयानामेकरूपता भवति ।

विश्वविद्यालयस्य विविधिविषयेषु परारि नियुक्तानां शिक्षकशिक्षकेतरकर्मचारिणाम् उद्योगस्थिरीकरणं कृतम् । एतावता विश्वविद्यालयानुदानायोगस्य नियमानुसारं ९६ कर्मचारिणां नियुक्तयः कृताः । अवशिष्टान्यारक्षितपदान्यपि समये समये पूरितानि सन्ति ।

परुदिव ऐषमोऽपि प्रत्यक्षतया कक्षाणामनारम्भात् नियतवर्गाः अन्तर्जालीयवर्गाश्च अन्तर्जालमाध्यमेन चाल्यमानाः सन्ति । वैश्विकमहामार्या छात्राणां भविष्यम् अवरुद्धमस्ति । परन्तु छात्राणां हितं मनसि निधाय सर्वैः कर्मचारिभिः कार्यं करणीयमस्ति । छात्राणां भविष्यनिरूपणं प्रत्येकं शिक्षकस्य आद्यं कर्तव्यं भवति ।

विश्वविद्यालयस्य सर्वतो विकासाय नियुक्तेन प्रत्येकम् अध्यापकेन प्रामाणिकतया अहर्निशं प्रयतनीयम् । यतः विश्वविद्यालयस्य कारणेन सर्वेषां नियुक्तानां परिवारः सुरक्षितः वर्तते । अतः सर्वेषां प्रामाणिकश्रमेण सहकारेण च विश्वविद्यालयस्य निरन्तरं विकासो भवतीत्यत्र न संशयः ।

**(आचार्यः वि. मुरलीधरशर्मा)**



# प्रथमः दीक्षान्तसमारोहः

**दिनाङ्कः - 20.10.2021**




**दीक्षान्तसमारोहसभागृहे वैदिकप्रार्थनारताः कुलाधिपतिसहिताः समे मान्याः**

राष्ट्रियसंस्कृतविद्यापीठस्य राष्ट्रियसंस्कृतविश्वविद्यालयत्वेन उद्घोषणानन्तरं विश्वविद्यालयस्य प्रथमः दीक्षान्तसमारोहः २०.१०.२०२१ दिनाङ्के तिरुपतिस्थमहतीसभागारे कुलाधिपतिकुलपतिविशिष्टातिथिप्रबन्धपरिषद्विद्वत्परिषत्सदस्यानां समुपस्थितौ प्रत्यक्षतया अन्तर्जालीयमाध्यमेन च महता वैभवेन महतोत्साहेन च समायोज्यत । समारोहस्यास्य शुभारम्भः महतीसभाङ्गणपर्यन्तं शोभायात्रया समभूत् । मान्यानां वेदिकालङ्करणानन्तरं वेदपण्डिताः वैदिकप्रार्थनया सभां वेदमन्त्रैः पवित्रामकार्षुः । विश्वविद्यालयस्य छात्राः संगीताध्यापकाश्च विश्वविद्यालयप्रार्थनां व्यधुः । परमादरणीयानां कुलाधिपतीनां दीक्षान्तसमारोहस्य उद्घाटनम्, कुलपतीनां स्वागतभाषणम्, मुख्यातिथीनां दीक्षान्तसन्देशभाषणम्, विश्वविद्यालयद्वारा प्रकाशितग्रन्थानां विमोचनम्, कुलाधिपतीनामाध्यक्षभाषणम्, विविधस्नातकादिभ्यः उपाधिप्रदानमित्यादयः नैके कार्यक्रमाः महतोल्लासेन समाचर्यन्त ।

## मुख्यातिथीनां स्वामिनारायणशोधसंस्थाधीशानां महामहोपाध्यायबिरुदभाजां पूज्यश्रीभद्रेशदासस्वामिनां दीक्षान्तभाषणसारः

अध्ययन-अध्यापनपरम्पराप्रस्थापकत्वं भारतीयसभ्यतायाः विशिष्टं लक्षणम् । शिक्षणं, पठनं, पाठनमिति भारतीयसंस्कृतेः विशिष्टो गुणः । अध्ययनाऽध्यापने तु भारतीयसंस्कृतेः प्राणवायुरेव । अस्माकं भारतीया संस्कृतिः शिक्षणेन श्वसिति । मन्ये विश्वस्मिन्नपि विश्वे समाजविकासार्थं विशिष्टपद्धतिपुरःसरं शिक्षणसंस्थायाः प्रस्थापनम् आवश्यकमिति प्रप्रथमवारं विचारो भारतवर्षेण कृतः । सृष्टेः आरम्भे प्रथमं विद्यादानं भवतीति भारतवर्षस्यैव वैदिककालकृतः समुद्घोषः। श्रूयतां श्रुतिनादो मुण्डकोपनिषदः 'ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम् अथर्वाय ज्येष्ठपुत्राय प्राह' (मुण्डकोपनिषद् १/१/१) इति । या संस्कृतिः सकललौकिकविद्यानां पारं गच्छति, सैव ततोऽपि श्रेष्ठां विद्याम् अभिलषति, जिज्ञासते, विमृशति चेत्यनुभवसिद्धम् । उक्तं पुनः मुण्डके एव 'द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवाऽपरा च' (मुण्डकोपनिषद् १/१/४) इति । अपि चाऽस्मद्भारतवर्षे हि विधिवद् अध्ययनप्रणाली प्राचीनकालतः एव प्रस्थापिता विलसति।

सा च पुनः सर्वाङ्गसम्पूर्णा, सर्वेतरविद्या प्रणाली मूर्धन्यभूताऽभिवर्तते इति तु सर्वसाक्षिकं सत्यम्। यथावस्थितज्ञानसम्पादनार्थं प्रतिष्ठापिता महनीया गुरुकुलपद्धतिः खलु अस्माकं भारतवर्षस्य महानुपकारो विश्वं प्रतीतीदानीन्तनकाले शिक्षणविभागे याः काश्चन शिक्षणपद्धतयः प्रसिद्धिमागताः, ताभिः सह भारतीयवैदिकसनातनपरम्पराप्रस्थापितायाः ज्ञानोपादानपद्धतेस्तुलनया ज्ञातुं शक्यम्। अन्यच्च भारतीयशिक्षणप्रणाल्याः एको विशिष्टो गुणो यद्भारतीयशिक्षणं प्राचीनकालतः एव जीवनमूल्याऽऽधारितं वरीवर्ति। अस्माकं भारतभूमिः वेदानां भूमिः। वेदास्तु नित्याः अपौरुषेया इति वेदविदामुद्घोषः। पदप्रयोगैः तत्तद्देशीयसंस्कृतेः परिचयो भवति। वेद इति ग्रन्थस्य नाम्नि एव विद्या विराजते। अस्माकं वेदेषु यः शब्दराशिः राजते, स एव भारतवर्षस्य ज्ञानवैभवं दर्शयति। भारतवर्षे वैदिककालतः एव गुरुः इति पदमस्ति। तदिदं शिक्षणपद्धतेः प्राचीनतां प्रसाधयति। अस्माकं भारतदेशे वैदिककालतः एव आचार्यपदं प्रसिद्धम्। इह स्वाध्यायोऽध्येतव्य इति वाक्यानि सन्ति। इह वैदिककालतः एव 'विद्ययाऽमृतमश्नुते' (केनोपनिषद्) इति शिक्षणमाहात्म्यं प्रथितम्। 'स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्' (तैत्तिरीयोपनिषद्) इति तु वैदिककालतः एव प्रतिदीक्षान्तं श्रूयते भारतवासिभिः। नूनं मम भारतवर्षेण शिक्षणक्षेत्रे अद्भुता भव्या दिव्या च अध्ययन-अध्यापन-प्रणाली प्रदत्ता, प्रस्थापिता, प्रवर्तिता चेति वक्तुं गौरवमनुभवामि।

### भव्यं भारतीयप्रज्ञावैभवम् -

प्रज्ञावैभवं खलु तत्तत्सभ्यतायाः वैभवं प्रतिपादयति। सा च प्रज्ञा तत्तत्सभ्यतायां संजातैः आविष्कारैः, तत्र प्रणीतैर्ग्रन्थैश्चाऽवगन्तुं शक्यते। अनया दृष्ट्याऽपि भारतीयप्रज्ञावैभवं भव्यम् इति स्वीकरणीयमेव। कानिचन उदाहरणानीह स्मरणीयानि।




भव्यदर्शनजननी मम भारतभूमिः। जगति इदानीमपि शिक्षणक्षेत्रे तत्त्वज्ञानविषये तत्त्वविदां चित्ताकर्षणहेतुभूतानां सांख्य-योग-न्याय-वैशेषिक-कर्ममीमांसा-वेदान्ताश्चेति षड् दर्शनानि भारतभूमौ समुद्भूतानि। तत्रापि दर्शनेषु पुनः गहनगभीरो विचारप्रकारोऽपि 'अत्यतिष्ठद् दशाङ्गुलः' इव सर्वोच्चपदवीसमारूढतां भजते। भारतीयसभ्यतायां दार्शनिकविचारोत्कर्षः काष्ठापारम्यमभिस्पृशति। इह आत्मविचारः परमात्मविचारेण परिपुष्टिमाप्नोति। सृष्टिविमर्शः मुक्तिविमर्शं जनयन् बन्धनमपि स्पष्टीकरोति। इह आनन्दोऽपि मीमांस्यते, सुखमपि विजिज्ञास्यते, दुःखमपि पर्यालोच्यते। अवश्यं प्रमाणमीमांसा, ज्ञानमीमांसा, वादलक्षणम् इत्यादिविषयाः भारतीयमनीषिभिरेव आविष्कृताः, प्रवर्तिताः, संमार्जिताश्चेति ऐतिह्यसत्यम्। भारते चर्चा सुलक्षितवादसम्पदा समर्चिता भवति। इह तर्कोऽपि आदरप्रकर्षं प्राप्य प्रमाणमनुगृह्णाति। इह 'श्रद्धावान् लभते ज्ञानम्' (गीता ४/३९) इति श्रद्धाऽपि ज्ञानसाधनतया परमासनमङ्गीकरोति। इह ऋषिज्ञानं कृषिज्ञानेन सह मैत्रीं भजते। इह गणितं ज्योतिषमुपकरोतीति बहुविधभव्यप्रज्ञावैभवाऽनुभवाद् भारतीयोऽस्मीति गौरवमभिवर्धते।

### भव्यकलाधरा भारतधरा -

कलापी यथा स्वपिच्छानि प्रसार्य कलया नः प्रसादयति, तथैव भारतवर्षे प्राचीनकालतः एव विविधाभिः कलाभिर्जगन्मनः प्रसादितम्। इह नाट्यकला गीतेन सह नृत्यति। इह राजनीतेर्धर्मदण्डेन समवायो वर्तते। भारतवर्षे एव खलु व्याकरणस्य तत्त्वज्ञानमाविष्कारमाप्नोत्। भारतवर्षे एव खलु Philosophy of literature, Philosophy of Theater, Philosophy of Music, Philosophy of Grammar, Philosophy of Pronunciation, Philosophy of Debating, Philosophy of Argumentation, Philosophy of Interpretation, Philosophy of Philosophy, इत्यादिकम् आविर्भूतम् अतिबौद्धिकं प्रज्ञापराकाष्ठया महितं विश्वेऽस्मिन् सर्वसमुत्कृष्टतां सेवते इति मे सम्यक् शोधाऽनुष्ठानपूर्वकः साक्षादेव तत्तद्विषयक-प्राचीनग्रन्थाऽध्ययनजः स्वानुभवलब्धो दृढो विश्वासः।

### भव्यसंवादभूमिर्भारतम् -

मनुष्याणां पारस्परिको व्यवहारोऽपि तत्तत्सभ्यतां परिचाययति। भारतवर्षे तु दम्पत्योर्मध्ये, पितापुत्रयोर्मध्ये, गुरुशिष्ययोर्मध्ये, मित्रेषु वा परस्परं संजातः संवादोऽपि भूमेरस्या वैशिष्ट्यं ब्रवीति । यथा 'न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति' (बृहदारण्यकोपनिषद्) इति पत्युः पत्नीं प्रति वचनं बृहदारण्यके, 'तत् त्वमसि श्वेतकेतो' (छान्दोग्योपनिषद्) इति पितुः पुत्रं प्रति उपदेशः, 'भूमा वै सुखम् । नाऽल्पे सुखमस्ति' इति शिष्यं प्रति गुरोर्वाक्यम्, 'सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्यः कौसल्यश्चाश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनस्ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणाः एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः' (प्रश्नोपनिषद्) इति मित्रमन्त्रणा ।

### भव्या मे संस्कृतभाषा -

तच्चेदं प्रागुक्तं सकलमपि भारतवैभवं संस्कृतभाषया समाजे जनसाधारणोपयोगे समागतम् इति वाच्यवस्तुमाहात्म्याद् वाचकशब्दोऽपि संस्कृतभाषारूपो सर्वातीतं माहात्म्यं भजते । विचारवैशिष्ट्याद् विचाराऽऽविर्भावसाधनभूता भाषाऽपि वैशिष्ट्यं भजते इत्यत्र संस्कृतभाषा उत्तमम् उदाहरणम् । संस्कृतं खलु व्याकरणदृष्ट्या ध्वनिदृष्ट्या भाषाशास्त्रदृष्ट्या च वैज्ञानिकी भाषा। संस्कृतं तत्त्वज्ञानस्य भाषा, समाजशास्त्रस्य भाषा, इतिहासस्य भाषा, साहित्यस्य भाषा, संगीतस्य भाषा, शिल्पशास्त्रस्य भाषा, राजनीतेः भाषा, अर्थशास्त्रस्य भाषा, गणितस्य भाषा, आयुर्वेदस्य भाषा, भूगोलज्ञानस्य खगोलज्ञानस्य भाषा, संस्काराणां च भाषा। संस्कृतं धर्मस्य भाषा, विज्ञानस्य भाषा, विचारस्य भाषा, व्यवहारस्य च भाषा आसीद्, अस्ति भविष्यति । संस्कृतभाषा न मृता, न म्रियते, न मरिष्यति । सा चेयं दिव्या भव्या च संस्कृतवाणी इह तिरुपतौ श्रीवेङ्कटेश्वरप्रभोः छत्रच्छायायां विराजमाने राष्ट्रियसंस्कृतविश्वविद्यालये संरक्षणं, संपोषणं संवर्धनं च लभत इति संस्कृतकिङ्करोऽहम् अतीव प्रसन्नतामनुभवामि ।

### भव्योऽयं राष्ट्रियसंस्कृतविश्वविद्यालयः -

ननु कथमयं विश्वविद्यालयोऽपि भव्य इति चेत्, उच्यते - अध्याप्यमानविषयाणां भव्यत्वाद्, पाठ्यमानग्रन्थानां भव्यत्वाद्, स्वस्वविषयनिपुणानाम् आचार्याणां भव्यत्वाद्, विद्याऽभीप्सूनां छात्राणां भव्यत्वाद्, समुचितव्यवस्थापनकुशलानां कुलपतिमहोदयानां भव्यत्वाद्, समुचितव्यवस्थापने साहाय्यमाचरतां कार्यसचिवानां कार्यकर्तॄणां च भव्यत्वादिति । अयं दीक्षान्तसमारोहः खलु सकलच्छात्रगणैः सोत्साहमनुष्ठितस्य भव्याऽभिलाषभरितस्य कठिनप्रयत्नस्य प्रणयपूरितभावाञ्जलिरूपो वरीवर्ति । अतः प्रप्रथमतया छात्रगणमधिकृत्य मम भावान् उद्घाटयितुमिच्छामि

### अयि भव्याश्छात्राः ! -

विविधविषयेषु समुत्तीर्णा छात्राश्छात्राश्चेति मम हार्दा धन्यवादाः। हे छात्राः! अद्य यावद् भवत्सु छात्रत्वमासीद्, अथ भवन्तश्छत्रत्वशालिनो भविष्यन्तीति नूनं नूतनजीवनाऽनुभवाऽऽरम्भमहोत्सवोऽयम्। तत्रभवद्भिः समर्जितेह विद्या, अथ भवन्तो विद्याविस्तारकाः भूत्वा भवन्तु अस्य विश्वविद्यालयस्य गौरवाभिवर्धका इति मे मनीषा । विचाराः संगृहीताः, अथ आचरणस्यास्त्यवसरः । भोः छात्राः, न मन्तव्यं समाप्तम् अध्ययनमिति, अपि तु जीवनस्याऽभि-नवोऽध्यायोऽद्य आरब्धः ।

विश्वविद्यालयेऽस्मिन् प्रवेशाऽनन्तरं प्रथमदिवसादेव प्रतिक्षणं विविधविद्यासंजीवनीरसायनेन भवतां पोषणं जातम् । भवतां प्रत्यहं जायमाना प्रगतिः अद्येह पुरस्कृता भवतीति कथमानन्दो न जायेत? इतोऽप्यग्रे भवन्तः अधिकाऽधिकं शोधकार्यं कुरुत । विश्वफलके स्थानमवाप्स्यथ । संस्कृतभाषासंगृहीतस्य विज्ञानवैभवस्य विश्वफलके यूयं प्रस्थापनं करिष्यथेति मे भद्रो भावः । अद्य भवन्तः अधः स्थिताः, किन्तु ये अधः स्थितास्ते उपरि समुपस्थिता भवेयुः इति समाशासे ।

भोः छात्राः ! संवत्सरपूर्वं जातो दीक्षाऽऽरम्भो ह्यस्तनजात इव अद्य दीक्षान्तं मिलतीति समयोऽयं कदा कथं क्व च सरतीति नैवाऽनुभूयते । तथाऽपि दीक्षान्तेऽद्य अवश्यं युष्माकं स्मृतिमञ्जूषायां नानाऽऽस्वादरमणीया मनोभावा भरिताः स्युरिति मन्ये। प्रतिदिनं नूतनानां विषयाणां श्रवणम्, ततस्तन्मननं, गृहकार्यं, समये समये गृह्यमाणाः परीक्षाः, मनःस्थितिं दोलयन्तस्तत्परिणामाः, नूतनानां मित्राणां परिचयः, तैः सह सहजो वार्तालापः, क्वचिद् उत्साहः क्वचिद् औदासीन्यं,क्वचित् पुस्तकेषु प्रीतिः क्वचिद् विरतिः, क्वचिद्

क्वचित् नृत्यम्, क्वचित् चर्चा क्वचिद् मौनम्, क्वचित् क्रीडा क्वचिद् निद्रा, क्वचिद् भक्तिः क्वचिद् ध्यानम् इत्यादिबहुभी रूपैः, बहुभिः संवेदनाभिः भवद्धृदयानि अद्य संरसितानीति तु स्वाभाविकम्।

दीक्षान्तसमारोहोऽयं किम् अद्य पदवीं प्राप्स्यामीति हृदयाऽऽनन्दं वर्धयति, उत अध्यापकानां मित्राणां वियोगं प्राप्स्यामीति मनःपीडां जनयतीति वक्तुं नैव शक्यम् । अवश्यम् अद्यतनो मध्याह्नो भवतां कृते सुखदुःखसंमिश्रसंवेदनाऽऽवेदक इति ममाऽपि प्राक्तनोऽनुभवः।

अयि भव्याश्छात्राः! बहुविधं खलु वो दायित्वमितः परम्। प्रथमं तावद् वैयक्तिकम्। ततः कौटुम्बिकम्। ततः व्यावहारिकम्। ततः सामाजिकम्। ततः वैश्विकमिति। स्वीयं स्वास्थ्यं रक्षत। मातुः पितुः भ्रातुः भगिन्याः इतरेषां च सम्बन्धिनां सेवां कुरुथ। नूनं भवद्भिः एतादृशे महनीये विश्वविद्यालये विद्यां प्राप्य यशःश्रीः प्राप्तेति भाग्यवन्तो भवन्तः।

अध्येतारस्तु भवन्ति चित्राणि, चित्रकारास्तु अध्यापकाः । जनाः खलु चित्रमेवाऽधिकं पश्यन्ति न चित्रकारम्। विद्यार्थिनो भवन्ति शिल्पानि, शिल्पकारास्तु शिक्षकाः । जनाः खलु शिल्पमेवाऽधिकं प्रशंसन्ति न तु शिल्पकारम्। तथापि चित्रादपि शिल्पादपि चित्रकारस्यैव शिल्पकारस्यैवाऽस्ति महत्त्वम्। अत इह चित्रकारनिभान्, शिल्पकारनिभांश्च अध्यापनरतान् उपकारिणः स्मर्तुमभिलषामि।

अयि भव्या आचार्याः! -

भवद्योगदानमपीह स्मरणीयमविस्मरणीयं च । अध्ययनाऽऽनन्दसन्दोहे निमज्जद्भिर्भवद्भिः विद्यावारिधौ सर्वोऽपि अध्येतृगणः ज्ञानाऽऽनन्दाऽनुभूतिमानीत इति महान् भवदुपकारः । शिक्षकत्वं कदाऽपि नैव भवति साधारणम् । उत्पत्तिप्रलयौ खलु तत्क्रोडे क्रीडतः इति प्रौढानाम् उक्तिः भवदर्थमेव उच्चारिता। विश्वविद्यालयेऽस्मिन् चतुर्दशशास्त्राणाम् अध्यापनं भवत्प्रयत्नैरेव साकारतामेति । जानामि, अवश्यमेव कदाचित् पितुरिव, कदाचिद् मातुरिव, कदाचिद् मित्रस्येव, कदाचिच्च गुरोरेव भवतां समुपदेशगङ्गाप्रवाहो विद्यार्थिनां बुद्धिमलप्रक्षालकः, प्रज्ञाप्रभाप्रकाशकः, अन्तःशैत्यप्रदायकः, प्रसन्नचेतस्त्वापादकः, आत्मसन्तोषाऽभिवर्षकश्च आसीदिति। जानामि, अध्यापनम् अध्ययनादपि कठिनमिति । अध्येता भवति कदाचिद् अनवधानः, भवति कदाचिद् अभ्यासदरिद्रस्तथापि ग्रहणधारणसक्षमे इव ग्रहणे धारणे च सामर्थ्याभाववत्स्वपि भवत्स्नेहाऽभिवर्षणम् अध्येतॄणां कृते अभ्याससामर्थ्याऽभिषेकतुल्यं भवति । आश्रमवृक्षा इव विद्यासिञ्चनश्रमेण छात्राः संपोषिता भवद्भिः।

श्रीमतां कुलपतीनां मार्गदर्शनाऽनुसारं तत्रभवद्भिः संस्कृतभाषया व्यवहाराऽनुकूलं वातावरणमिहापादितमिति अत्यन्तम् आमोदं जनयति । अत्र संस्कृतं न केवलम् अध्यापनमाध्यमं परं वार्तालापमाध्यममपि । छात्राः, आचार्याश्च कक्ष्यायां परिसरे छात्रावासेषु, भोजनशालासु किं बहुना सर्वत्रापि संस्कृतेनैव व्यवहरन्तीति विषयः विश्वविद्यालयस्य अस्य वैलक्षण्यम्, उत्कर्षताञ्चाभिव्यनक्ति । शास्त्राणि संस्कृतभाषया पाठयन्तीति अत्रत्यं वैशिष्ट्यम् । तदिदम् अध्यापकगणस्य संकल्पं विना, उत्साहं विना, परिश्रमं विना च असम्भवम् । अपि च विश्वविद्यालयेऽस्मिन् सर्वदाऽत्र शास्त्रविषयिण्यः चर्चा भवन्ति। अध्याप्यमानानां शास्त्राणां 'पारिषदनाम्नी' चर्चागोष्ठी प्रतिमासं भवति यत्र भवन्तः सर्वे अध्यापकाः स्वीयं शास्त्रं विषयं वा अधिकृत्य भृशं चर्चयन्ति। तदिदमपि शास्त्रनिपुणं पाण्डित्यपरिपूरितम् अध्यापकगणं विना नैव अस्तित्वमेतीति भवन्तो विश्वविद्यालस्याऽस्य सुयशोमूर्धन्याः।

एतद्विश्वविद्यालयस्य आचार्याणां विद्यावैभवम् मया साक्षादेवाऽवलोकितम् । वारंवारमागतमिह। वारंवारं चर्चितं बुहुषु विषयेषु । अस्मिन्नेव वर्षे फरवरीमासे दशदिनपर्यन्तं परब्रह्मस्वामिनारायणप्रबोधितम् अक्षरपुरुषोत्तमदर्शनमधिकृत्य विश्वविद्यालयेऽस्मिन् मीमांसान्यायव्याकरणवेदान्तसाहित्यादिविविधविषयप्रकाण्डपण्डितैः स्वस्वसंप्रदायपरिनिष्ठितैः पारम्परिकपद्धत्याऽऽमूलचूडं समधिगतशास्त्रशब्दसारैः विद्वद्भिः सह प्रतिदिनं प्रातः दशवादनाद् आरभ्य सायं सप्तवादनपर्यन्तं न्यायादिविषये विमर्शो जातः। विमर्शेनाऽनेन एतद्विश्वविद्यालस्य आचार्येषु इतरविश्वविद्यालयविलक्षणं विशिष्टं तेजः साक्षादनुभूतम् । अभिनवविचाराणाम् आदरो हि अध्यापकानां विशिष्टो गुणः, स गुण एतद्-राष्ट्रियसंस्कृतविश्वविद्यालयस्य आचार्यगणे साक्षाद् दृष्टः। विनयो विवेक उत्साहो मैत्रीत्यादिर्गुणगणोऽपि साक्षादवलोकितः। अतो हे आचार्याः, भवच्चरणेषु नमस्कारान् समर्पयामि।

अयि भोः कुलपतिमहोदयाः ! -

विश्वविद्यालयकुलस्य सर्वविधोत्कर्षमूलभूताः समर्जितौ खलु भवद्भिः व्यवस्थापन-नैपुण्यनिशितधिया, विद्यावैभवेन समेषाम् अध्येतॄणाम्, अध्यापकानां, व्यवस्थापकानां, कार्यकर्तॄणां च हृदयाऽऽदराऽनुरागौ । मुख्याऽऽयोजक एव स्वीयसंस्थायाः प्रगतौ अधोगतौ वा भवति मुख्यं कारणम्। भवतामेव दृढसंकल्पेन सातत्यसंयुतेन प्रयत्नेन च राष्ट्रियसंस्कृतविद्यापीठं राष्ट्रियसंस्कृतविश्वविद्यालयत्वेन गतवर्षे (२०२०) अप्रिलमासस्य त्रिंशे (३०) दिनाङ्के भारतसर्वकारेण विकासितम् । ततः आरभ्य अयं विश्वविद्यालयो भवतामेव मार्गदर्शने विभिन्नानां शैक्षणिककार्यक्रमाणां सञ्चालनपथे अग्रे धावति ।

विश्वविद्यालयोऽयं चक्रद्वये NAAC A++ कक्षां प्राप्य संस्कृतशास्त्रविद्यास्थानेषु स्वीयप्रभावम् आतनोत्। अथ पुनश्च अयं विश्वविद्यालयः तृतीयचक्रे NAAC मूल्याङ्कनार्थं गच्छति ।

मान्याः कुलपतिमहोदयाः! भवतामेव खलु मार्गदर्शने कोरोनाविपत्ति-परिस्थितिष्वपि अन्तर्जालमाध्यमेन विभिन्नपाठ्यक्रमाणां सञ्चालनद्वारा विश्वे १९देशीयानां छात्राणाम् अध्यापनेन अनेन विश्वविद्यालयेन वास्तविकं विश्वविद्यालयस्वरूपम् (वैश्विकं स्वरूपम्) अधिगतम् ।

आदरणीयाः कुलपतिमहोदयाः! विभिन्नभाषाभाषिणां, विभिन्नसंस्कृतिमतां समुचितसमावेशेन भिन्नराज्यस्थानां, विभिन्नव्यक्तित्ववताम् आचार्याणां छात्राणाञ्च पारस्परिक-सौहार्दवातावरणसम्पादनेन अयं विश्वविद्यालयः सर्वेषु भारतीयेषु संस्कृतविद्यालयेषु, सर्वेषु विश्वस्तरीयेषु विश्वविद्यालयेषु च सम्राडिव चकास्ति। तदिदं भवत्परिश्रमफलमिति निश्चप्रचम् ।

अपरं च प्राचीनभारतीयशिक्षाप्रणाली इह गुरुकुलपरम्पराम् आधृत्य समग्रविश्वे प्रथितयशस्का समभवत् । आधुनिकभारतीयशिक्षाप्रणाल्यां तादृश उत्कर्षः नैव द्रष्टुं शक्यते।एतत्सर्वं सुष्ठु ध्यात्वा अनेन विश्वविद्यालयेन प्राचीनशास्त्राध्यापनप्रणालीम् अनुसृत्य अद्वैतादिशास्त्राणि अध्यापयितुं गुरुकुलं प्रतिष्ठापितमिति विशेषः अत्यन्तमादरणीयः उदाहरणीयश्च। तत्राऽपि पुनः इह गुरुकुलपरम्परामेव आधृत्य विश्वविद्यालयेऽस्मिन् परब्रह्मस्वामिनारायणप्रबोधितस्य अक्षरपुरुषोत्तमदर्शनस्याऽपि अद्वैत-विशिष्टाद्वैत-द्वैतादि-वैदिकदर्शनानामिव अध्यापनं भविष्यतीति संकल्पितमिति नितराम् आनन्दाऽऽवहम् ।




भवतां मार्गदर्शने तालपत्रग्रन्थानां संरक्षणे, सम्पादने बद्धकटिरयं विश्वविद्यालयः M.Phil. छात्राणां पाठ्यक्रमे तालपत्रग्रन्थसम्पादनम् अनिवार्यमकरोत् । तालपत्रग्रन्थान् आधृत्यैव तन्निष्ठं वैज्ञानिकसाहित्यं बहिरानीय समर्पयितुम् ऐषमः समाजाय राष्ट्रियसंस्कृतविश्वविद्यालयेन आयुर्वेदीयं ग्रन्थद्वयं प्रकाश्यते ।

विश्वविद्यालयोऽयं बालानां जीवनविकासमपि क्रोडीकरोति । संस्कृतभाषाविकासप्रचारविषये बद्धश्रद्धोऽयं विश्वविद्यालयः बालकेन्द्रैः बालान् सरलसंस्कृतं बोधयति । तदिदं भवतां भव्यभविष्य-निर्माणभावनाम् अभिव्यनक्ति ।

विश्वविद्यालयेन नैके सामाजिककार्यक्रमाः क्रियमाणास्सन्ति, येषां प्रभावेण स्थानिकानां छात्रसंख्या विश्वविद्यालये वर्धिता, इति भवतां सामाजिकोत्थानदर्शितां दर्शयति । अतः, अयि कुलपतिमहोदयाः, तत्रभवद्भ्यो धन्यवादान् समर्पयामि ।

अयि भोः भव्याः कुलसचिवाः कार्यकराश्च -

सर्वसाहाय्यमेव सफलतायाः रहस्यम् । विश्वविद्यालयेऽस्मिन् स्वस्वकार्येषु अभिरताः सर्वेऽपि नूनमद्य स्मरणीयाः। तेषां कार्यनिष्ठया अध्येता सुखेन अध्येति, अध्यापकोऽध्यापयति, समये परीक्षाः भवन्ति, समये परिणामाः उद्घोष्यन्ते, समये पुस्तकानि

पत्रिकाश्च प्रकाश्यन्ते, समये सर्वं स्वच्छतामेति । अधिकारिणां कार्यकराणाञ्च खलु परिश्रमेण वृक्षाः हसन्ति, पुष्पाणि सौरभं विकिरन्ति, लताः द्रुममाश्रित्य दोलनसौख्यमाप्नुवन्ति। यदेव च यादृशं च महत्त्वं विश्वविद्यालये विद्यार्थिनाम्, अध्यापकानां, कुलपतिमहोदयानां च वर्तते तदेव च तादृशं चेतरेषां कार्यकर्तॄणामिति तेऽपि धन्यवादार्हाः।

भव्या भद्रप्रार्थना -

अथान्ते ब्रह्म प्रार्थये । अयि ब्रह्मन्! अयि परब्रह्मन्! अयि अक्षरब्रह्मन्! सरस्वतीप्रवाहोऽयम् अस्मन्मनः प्रसादयतु, चेतः परिप्लावयतु, बुद्धिं प्रक्षाल्य प्रकाशयतु, आत्मना तादात्म्यं संप्राप्य, आत्मानं स्वासनं विधाय सततं विद्यावैभवं विस्तारयतु, येनाऽक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्यामित्यादि मन्त्रोक्तां सर्वविद्याप्रतिष्ठाभूतां परां विद्याम् अस्मदात्मनि नित्यं प्रस्थापयतु, तथा च सदैव भव्यैर्भद्रभावैर्नो रसयतु इति ममेष्टदेवं स्वामिनारायणं, गुरुहरिं, महन्तस्वामिमहाराजं च संप्रार्थ्य प्रणमामि विरमामि च ।

## अध्यक्षाणां कुलाधिपतीनां पद्मभूषणोपाधिसम्मानितानां श्रीनीडामङ्गलं गोपालस्वामिमहोदयानाम् आध्यक्षभाषणसारः

अस्माकं विश्वविद्यालयः गतसंवत्सरे केन्द्रीयविश्वविद्यालयत्वेन परिणत इति ततः अभिवृद्धिमेव क्रमेण प्राप्नोतीति च दर्शं दर्शं हृष्यति चेतः । सर्वाङ्गीणतया विश्वविद्यालयस्य विकासः सञ्जायते इति संस्कृतक्षेत्रस्यैव विकास इव आभाति । अस्य च विकासस्य हेतुभूतान् भूतपूर्वान् विश्वविद्यालयसदस्यान् विद्यमानान् च अभिनन्दामि । किन्त्वनेन अस्माकमुत्तरदायित्वं वर्धितमेव । इदानीम् इतरसंस्थानां सहयोगेन अन्तर्विषयसम्बन्धे गवेषणे स्तराभिवृद्ध्यै च समयः समुपस्थितः । अस्मिन् विश्वविद्यालये राष्ट्रियशिक्षानीतेः अनुसारं पाठ्यक्रमाणाम् उपक्रमाय प्रयत्नाः विधीयन्ते इति मोदाम्बुधौ गाहते इव मनः । चतुस्संवत्सरात्मिका स्नातककक्ष्या बहुमुख-प्रवेशेन बहुमुख-निर्गमेन च समारभ्यते इति तदर्थं पाठ्यक्रमाः अपि सिद्धाः इति अयं विषयः विद्वज्जन-मनो-विलासाय कल्पते । राष्ट्रियशिक्षानीतेः समुपस्थापनाय अस्माभिः तपस्येव कृषिं विधाय स्तराभिवृद्धिः करणीया भवति ।




भारतीयगणितस्य आधुनिकगणितस्य च अन्तस्सम्बन्धविषयरूपेण पाठ्यक्रमम् आरभ्य अन्तर्विषयक-पाठ्यक्रमा बहवः अस्मिन् संवत्सरे समायोज्यन्ते इति प्रमोदस्य स्थानम् । शैक्षिकाङ्क-कोशस्य (Academic Bank of Credits) निवेशाय सावधानतया प्रयत्नाः विधीयन्ते इति सर्वविधाभिवृद्धिः बोभूयते । तस्य निवेशनाय विशिष्टा समितिः आयोजिता इत्यपि कार्यानुकूलो यत्नः नन्दयति चेतः । अस्मिन् सर्वेषां सहकारेण भव्यं भावीति आशासे ।

गतवर्षादारभ्य अन्तर्जालमाध्यमेन विविधविषयकान् अनेकान् पाठ्यक्रमान् पाठयन्तः अस्माकम् आचार्याः भारतीयान् वैदेशिकान् छात्रांश्च सहस्रसङ्ख्याकान् आकर्षन्तीति ज्ञात्वा मम मनः महान्तम् आनन्दम् अनुभवति । अस्मिन् शुभे अवसरे अहं तान् सर्वानपि हृदयेन अभिनन्दामि

अयं विश्वविद्यालयः समाजसेवां तथा च संस्कृतसेवाञ्च विधाय उत्तरोत्तराभिवृद्धिं प्राप्नुयादिति कामये । दीक्षान्तसमारोहे भागग्रहीतारः छात्राश्च उपाधिलाभेन समाजसेवां विधाय विश्वविद्यालयस्य कीर्तिं दिक्षु प्रसारयन्तु इति, तथैव विद्याप्रणाल्या लोकक्षेमाय यतेमहि इति च आशासे ।

**धीधनपूजितश्चायं देववाणीनिकेतनम् । राजतां यशसा नित्यं विश्वविद्यालयो महान् ॥**
**सर्वेषां स्वस्तिर्भवतु । सर्वेषां शान्तिर्भवतु । जयतु संस्कृतम् । जयतु भारतम् ॥**

# प्रथमे दीक्षान्तसमारोहे कुलपतीनाम् आचार्यविरिवेण्टिमुरलीधरशर्ममहोदयानां स्वागतभाषणं विश्वविद्यालयीयं विकासविवरणञ्च

निखिलविद्यानिलयायमानः सकलधीधननिकषायमाणश्च अस्माकं राष्ट्रियसंस्कृतविश्वविद्यालयः देववाणीसुवासप्रसारं दिक्षु प्रसारयन् केन्द्रियविश्वविद्यालयत्वेन परिणत इति सौगन्ध्ययोजनमिव सौवर्णसुमस्य संवृत्तमिति । सोऽयं विश्वविद्यालयः सरस्वतीसमुपासकानाम् उपजीव्यभूतः अस्मिन् शुभावसरे स्वकीयं प्रथमं दीक्षान्तसमारोहं समातनोतीति मोमुद्यते चेतो नः । गतेषु पञ्चसु वर्षेषु अस्मिन् विश्वविद्यालये यद्यत्प्रवृत्तं तत्सर्वस्यापि विशिष्टानंशान् तत्रभवतां भवतां समक्षमुपस्थापयितुमुत्सहे ।

**शैक्षिकविकासः -**

**(i)** प्रकाशनानि - तमसा आवृतायामिव कोरोनामहामारीग्रस्तायामपि परिस्थितौ विश्वविद्यालयोऽसौ दृढव्रतः सरल-संस्कृतभाषया पञ्चमहाकाव्यानां सरलव्याख्यानरचनायै कुलाधिपतिभिः विहितसंस्कृतरतिभिरादिष्टे पथि नैषध-रघुवंश-शिशुपालवध-महाकाव्यानि प्राचीकशत् । वैज्ञानिकतालपत्रग्रन्थस्थान् विषयान् प्रकाश्य समाजाय समर्पयितुं कृतप्रयत्नेन अस्मद्विश्वविद्यालयेन गणितशास्त्रे कुट्टकाख्यो ग्रन्थः आगमेषु "Architectural Engineering and Iconography in Vaishnava and Saiva Agama" इति ग्रन्थश्च प्राकाश्यं नीतः । ''औषधकल्पः, चिकित्सारससङ्ग्रहः'' इति नामभ्यां ग्रन्थद्वयम् अचिरादेव प्राकाश्यं नेष्यते । शास्त्राध्ययनं चिकीर्षूणाम् अल्पविद्यापरिग्रहाणां बालानां सुखबोधाय मीमांसा-व्याकरण-साहित्याद्वैत-ज्योतिषशास्त्रप्रकाशकाः ग्रन्थाः प्रकाशितास्सन्तः तदधीतिभिः, विद्वद्भिश्च भृशं समाद्रियन्ते, केषुचिद् विश्वविद्यालयेषु पाठ्यपुस्तकत्वेनापि समस्थाप्यन्त । भारतीयज्ञान-प्रणालीद्योतनाय ''Indian Knowledge Systems'' इति पाठ्यक्रमोऽपि निर्मीयमाणो विभाति।




(ii) पारम्परिकगुरुकुलपद्धत्या निशितशास्त्राध्ययनाय ''परमाचार्यशास्त्रपरिरक्षणकेन्द्र''नाम्ना गुरुकुलं समारब्धं, यत्रेदानीम् अद्वैत-न्यायशास्त्रयोः अध्ययनव्यवस्था समुपाकल्पि । सर्वकारीयसंस्थासु साम्प्रतं पारम्परिकपद्धत्या शास्त्राध्ययनव्यवस्था केवलमस्मद्विश्वविद्यालये प्रचलतीति कथयितुमहं गर्वमनुभवामि ।

(iii) अन्तर्जालपाठ्यक्रमाः - बालेषु मानवीयमूल्यानां वर्धनाय गतत्रिवर्षेभ्यः विधीयमानाः प्रयत्नाः फलदाः जाता इत्यानन्दकरो विषयः। बालानां सरलसंस्कृतबोधनाय निर्मितानि षट्त्रिंशत्सङ्ख्याकानि ''बालकेन्द्राणि'' यद्यपि कोरोनामहामारीवशात्स्थगितानि, अथापि अन्तर्जालमाध्यमेन ''बालगोकुल''नाम्ना सञ्चाल्यमानानि पञ्चदशदेशेभ्यः छात्राणां समावर्जनेन अनिरीक्षितानि वरप्रसादभूतानि संवृत्तानि । अत्र अधीयानाः छात्राः मानवीयमूल्यानि तथा संस्कृते उत्तमोत्तमं सम्प्रेषणकौशलञ्च प्राप्नुवन्तस्सन्ति । गतसंवत्सरात् सार्धैकवर्षावधावेव (April 2020 to June 2021) अष्टपञ्चाशत् (58) अन्तर्जालपाठ्यक्रमाः बाह्यच्छात्राणां कृते आयोजिषत, यत्र ऊनविंशत्यधिकत्रिशतोत्तर-चतुस्सहस्रसङ्ख्याकाः (4319) छात्राः निजाध्ययनेन आत्मनः धन्यान् व्यधुः । अस्मिन् शैक्षिकसंवत्सरेऽपि (जुलै 2021 तः) ऊनविंशतेः विदेशानां छात्राः 1400 सङ्ख्याकाः अधीयाना बोभूयन्ते । एभिरन्तर्जालीयपाठ्यक्रमप्रकल्पैः विश्वविद्यालयोऽयं निश्चप्रचम् अन्ताराष्ट्रियस्तरमध्यगच्छदिति निवेदयामि ।

विश्वविद्यालयेन ऐषमः राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदा क्रियमाणाय मूल्याङ्कनाय प्रयत्नो विधीयमानो भवति । दिसम्बर् मासि समर्पणाय स्वाध्ययनप्रतिवेदनम् (SSR) सिद्धं भविष्यतीति तदर्थमनवरतं यायत्यमानाः भवामः, अवश्यं A++ अङ्केन प्रत्यायनं भविष्यतीति दृढं विश्वसिमश्च ।

**(iv) भौतिकविकासः**

अ) भारतसर्वकारस्य शिक्षामन्त्रालयद्वारा वितीर्णेन धनसाहाय्येन सप्तपञ्चाशत्कोटिधनर्णेन छात्रावासः, कक्ष्याभवनञ्चेति भवनद्वयं निर्मितम्।

आ) तिरुपतौ विद्यमानां जलसमस्यां ज्ञात्वा स्नानाद्युपयुक्तजलराशेः पुनःपरिष्कारेण वृक्षादीनां सेचनाय STP Plant सन्नद्धं विद्यते।

इ) छात्राणां तथा उद्योगिनां कर्मकराणाञ्च अवसरचिकित्साप्रदानाय चलच्चिकित्सावाहनम् (Ambulance) क्रीतम्।

ई) स्वास्थ्यकेन्द्रस्य विकासोऽकारि। सम्प्रति पञ्चभिः प्रकोष्ठैः रोगिणां सेवां वितनोति तच्च केन्द्रम्। रोगविश्लेषणशालापि (Pathological Lab) सन्नद्धीक्रियते।

उ) योग-सांस्कृतिकादिकार्यक्रमाणां प्रदर्शनाय प्रातिभवेदिका विशदीकृता, यत्र चतुश्शतं जनाः समकालमेवोपविश्य विभिन्नान् कार्यक्रमान् द्रष्टुमर्हन्ति। योगाभ्यासादि-कार्यक्रमान् तथा गोष्ठीश्च आयोजयितुं प्रकृतेः क्रोडे एव मनोज्ञं स्थानमिदं वरीवर्ति। एवमेव विश्वविद्यालयस्य अन्तर्जालीयपाठ्यक्रमपाठने सामर्थ्यं वीक्ष्य Virtual Class rooms – 2, E-class rooms – 3, Studio-1 इत्येतादृशैः सौविध्यैः अचिरादेव सनाथीकृतो विश्वविद्यालयो भविष्यति।

**भावियोजनाः -**

योगचिकित्साभवननिर्माणं, ग्रन्थालयभवननिर्माणं, ललितकलाभवननिर्माणं, मुक्तसभाङ्गण-वेदिकाविस्तारः इत्येतान्यायोजनानि भारतसर्वकारस्य शिक्षामन्त्रालयस्य प्रोत्साहनेन अग्रे सम्भविष्यन्ति। तदर्थं प्रशासनम् अनारतं कार्यरतमास्ते। नियतपाठ्यक्रमाणामिव अन्तर्जालीयपाठ्यक्रमाणां पाठनेऽपि अस्मद्विश्वविद्यालयस्य अध्यापकानां सामर्थ्यमनितरसाध्यं निखिलधीधनश्लाघ्यमानञ्च वरीवर्तीति निश्चप्रचम्।

ससमयं परीक्षादिसञ्चालनेन प्रमाणपत्रादिवितरणेन परीक्षाविभागीयैः समैरपि परीक्षानियन्त्रक-प्रमुखैरधिकारिभिः विश्वविद्यालयीयगुणवत्तासंरक्षणे अनितरसाधारणं योगदानं विहितम्। तथैव NAAC संस्थायाः मूल्याङ्कनार्थं सर्वविधविषयसङ्ग्रहण-तत्सुव्यवस्थीकरणसन्दर्भेऽपि आन्तरिकगुणवत्ताश्वासनकेन्द्रनिदेशकैः, सर्वैराचार्यैः, प्राध्यापकैः अधिकारिभिश्च अहमहमिकया अनुष्ठीयमानाः प्रयासाः नितरां श्लाघ्याः। तथैव भवननिर्माणादिविविधकार्यक्रमसम्पादने कुलसचिव-वित्ताधिकारिप्रमुखाणां पदाधिकारिणां कर्मकराणामन्येषाञ्च सुसहयोगः आदरणीयः उदाहरणीयश्च।

अतः भाविकाले वैश्विकस्तरे देववाणीसुवासप्रसारणे अस्माकं विश्वविद्यालयः समेष्वपि संस्कृतविश्वविद्यालयेषु अग्रिमस्थानं भजिष्यतीति सगर्वं कथयामः।

प्रियाः स्नातकाः ! भवन्तः सर्वे अनवरतं स्वाध्यायप्रवचनरूपतपस्यया समाजस्य सेवां वितन्वन्तु। विश्वविद्यालयस्यास्य कीर्तिपताकाम् उत्तोलयन्तः यशोमुकुटस्य बर्हायमाणानि बिरुदानि भजन्तु। भावत्कसेवया मातृभूतेयं संस्था मोमुद्यताम्। सर्वविधप्रयत्नैः समाजस्य राष्ट्रस्य च सेवया अनितरसाध्यं यशः प्राप्यताम्। श्रीवेङ्कटेश्वरस्य कृपाविलासधोरणीभिः भवतां सर्वविधश्रेयःप्राप्तिः भूयादित्याशासे।

पुनरेकवारमहं तत्रभवद्भ्यः सर्वेभ्यः मङ्गलमये शोभावहे च कार्यक्रमेऽस्मिन् हार्दं स्वागतं वितरन् विश्वविद्यालयस्यास्य सर्वतोमुखविकासे तत्रभवतां भवतां सर्वविधं योगदानम् आशीर्वादाँश्च भूयो भूयः सम्प्रार्थयमानो विरमामि।

**जयतु जयतु कीर्त्या विश्वविद्यालयोऽयम्**<br>
**लसतु भुवि यशोभिः छात्रवृन्दः कलाढ्यः।**<br>
**जयतु भरतखण्डः संस्कृतेः वासभूमिः**<br>
**जयतु विबुधवाणी सर्ववन्द्या वरेण्या॥**

----------

# राष्ट्रियसंस्कृतविश्वविद्यालयेन प्रकाशितानां ग्रन्थानां लोकार्पणम्

**नैषधीयचरितम्** - प्रथमभाग: द्वितीयभागश्च
सरलव्याख्याता - आचार्य: कोम्पेल्लासूर्यनारायण:
आङ्ग्लव्याख्यानम् - श्रीमान् परिमिरवि:
सहायिका - डा. वि. सूर्यप्रभा







महाकविना महायोगिना सारस्वतचिन्तामणिमन्त्रोपासकेन श्रीहर्षेण प्रणीतं द्वाविंशतिसर्गात्मकं विद्वदौषधम् इति प्रसिद्धं नैषधीयचरितमहाकाव्यं संस्कृतवाङ्मये विशिष्टं स्थानं भजते । काव्ये अस्मिन् नलदमयन्त्योः इतिहासे प्रसिद्धस्य चरितस्य विवाहपर्यन्ता कथा वर्णिता । गम्भीरभावनाप्रस्तावने, शृङ्गारकरुणादिरसानाम् अभिव्यञ्जने च कवेः प्रतिभा अनितरसाधारणी । हंसस्य करुणाविलापः, हंसस्य दूत्यम्, हंसदमयन्ती-संवादः, नलदेवतासंवादः, नलदमयन्तीसंवादः, सरस्वत्या राज्ञां वर्णनम्, पञ्चनलीयसंदर्भः, विविधवर्णनानि, विविधसन्निवेशाः, विशिष्टप्रयोगाः, दार्शनिकपूर्वपक्षसिद्धान्ता इत्याद्या अनेके विषया विदुषां सहृदयानां मनांसि आवर्जयन्ति । काव्यमिदं बाल्यसखीनामकेन सरलसंस्कृतव्याख्यानेन विभूषितमस्ति। इदं व्याख्यानं पदविभागः, अन्वयः, प्रतिपदार्थः, सरलसंस्कृतभाषायां भावः, विशेषांशाः, आङ्ग्लभाषायां तात्पर्यम्, सूक्तिरत्नानि इति सप्तभिः अंशैः अलङ्कृतम्। अयं ग्रन्थः काव्यरसज्ञानाम्, संस्कृतच्छात्राणां च कृते उपयोगी भवतु इति आशास्महे।






नैषधीयचरितस्य भागद्वयं विमोच्य व्याख्यातॄन् आचार्यान् कोम्पेल्लासूर्यनारायणमहोदयान् सम्मानयन्तः मान्याः अतिथयः भद्रेशस्वामिचरणाः कुलाधिपतयः कुलपतयः कुलसचिवाः संकायप्रमुखाश्च।

## महाकविमाघविरचितं शिशुपालवधम् - प्रथमभाग: द्वितीयभागश्च

सरलव्याख्याता - डा. सि.एच्. नागराज:







सम्प्रति संस्कृतजगति हिन्दीव्याख्यानेन क्वचित् प्रान्तीयभाषाव्याख्यानैः आङ्ग्लविवरणेन च बहवः अपि माघकाव्यस्य ग्रन्थाः लभ्यन्त एव । तेषु सत्सु प्रस्तुतव्याख्यानस्य का अपेक्षा ? इति प्रेक्षावतां भवतां मनस्सु निर्विरोधं प्रश्नः कश्चित् जायेत । तदुत्तरमिदं यत् 'संस्कृतमाध्यमेन अधीयानानां छात्राणां जिज्ञासूनां संस्कृतप्रणयिनाम् अपि प्राथमिकस्तरादेव सरलसंस्कृतव्यवहारेण ग्रन्थानां पठनपाठनपद्धतिरारब्धव्या' इत्यस्माकं विश्वविद्यालयाधिष्ठानस्य मङ्गलमयः कश्चन सङ्कल्पः । इयता कालेन पञ्चमहाकाव्यानां वैदुष्योपेताः व्याख्यानग्रन्थाः बहवोऽपि सन्ति । तेषाम् अवगमने किञ्चिदिव कष्टम् अनुभवन्ति प्राथमिकाध्येतारः । प्राथमिकाः वा माध्यमिकाः वा छात्राः जिज्ञासवः सर्वेऽपि सुखेन काव्यमिदं स्वयमधीत्य यथा अवगच्छेयुः, तद्दिशैव कुलपतिवर्यैः मुरलीधरशर्ममहाशयैः निर्धारितां प्रणालीम् आश्रित्य पञ्चमहाकाव्यानाम् अपि व्याख्यानारम्भः संवृत्तः । तस्मिन्नेव क्रमे माघकाव्यस्य अपि इयं व्याख्या प्रणीता वर्तते ।

काव्यस्यास्य सुखावबोधाय प्रतिपदमपि जागरूकतया प्रणाली इयं समाश्रिता । यथा भूमिकायाम् अस्य काव्यस्य सम्बन्धी सङ्क्षिप्तः इतिहासः, माघकवेः वैदुष्यपरिचायकः लघुतरः उपोद्घातश्च प्रदत्तः । सर्वेषां विंशतिसर्गाणामादौ तस्य तस्य सर्गस्य सङ्क्षिप्तः कथासारः सरलसुन्दरसुमधुरशैल्या प्रस्तुतः । येन तत्सर्गस्य अध्ययनात् पूर्वमेव तदन्तर्गता कथा अपि सुखेन ज्ञायेत । ततः सर्वेषु सर्गेषु विद्यमानानां श्लोकानां व्याख्यानम् एवंक्रमेण उपस्थापितं वर्तते । यथा तत्र श्लोकानाम् आदौ अपेक्षितस्थलेषु अवतारिकाः निर्दिष्टाः। प्रतिश्लोकमपि श्लोकगतानां पदानां विच्छेदः, अन्वयः, प्रतिपदार्थः, भावार्थः एवम् अपेक्षितस्थलेष्वेव विशेषव्याख्या अपि सन्निवेशिताः । एतैः उपायैः भवन्तः श्लोकान् पठन्ति चेत् तेषां भावं जानन्ति एव, ततोऽपि अज्ञातपदानाम् अर्थमपि सुखेन वाक्यप्रयोगपुरस्सरं सम्यग् अवगच्छन्ति च । सर्गान्ते तदन्तर्गतानां सुभाषितानां लोकोक्तीनां च आवलिः निर्मिता। सम्पूर्णकाव्यस्य व्याख्यानसमाप्तेः परं पञ्चश्लोकात्मकः कविवंशपरिचयः अपि पूर्ववदेव व्याख्यातः । एवमस्य महाकाव्यस्य व्याख्यानमिदं परिसमाप्तम् ।







शिशुपालवधस्य भागद्वयं विमोच्य व्याख्यातॄन् डा. सी.एच्.नागराजमहोदयान् सम्मानयन्त: मान्या: अतिथय: भद्रेशस्वामिचरणा: कुलाधिपतय: कुलपतय: कुलसचिवा: संकायप्रमुखाश्च ।




**महाकविकालिदासविरचितं रघुवंशम्** - द्वितीयभागः (११-१९ सर्गाः)

सरलव्याख्याता - डा. शिवरामभट्टः

महाकविना कालिदासेन विरचिते अस्मिन् महाकाव्ये आहत्य नवदश सर्गाः सन्ति । रघुवंशीयराजानां वर्णनात्मकम् इदं महाकाव्यं कालिदासस्य उपमाद्यलङ्कारविशिष्टरचनाशैल्या प्रत्येकं सहृदयहृदयाह्लादकं वर्तते । अस्मिन् महाकाव्ये न केवलं राज्ञां वर्णनम् अपि तु जीवकुलस्य जीवनमूल्यमपि बोधितं वर्तते। अलङ्कार-पोषितस्य अस्य महाकाव्यस्य तत्त्वावगमने नैकाः टीकाः नानाभाषासु विलसन्ति । तत्र मल्लिनाथेन विरचिता प्रामाणिकी व्याख्या विद्वद्भिः आद्रियमाणा संजीवनी प्रसिद्धा । तां टीकाम् आधृत्य सरलया शैल्या इयं व्याख्या लिखिता वर्तते । व्याख्यायामस्यां प्रतिश्लोकं पदच्छेदः, अन्वयः, प्रतिपदार्थः, भावार्थः, विशिष्टव्याख्या इत्येवं क्रमः विद्यते । अस्याः व्याख्यायाः प्रथमभागः प्रथमसर्गात् दशमसर्गं यावत् प्रकाशितः । अयं द्वितीयभागः एकादशसर्गात् नवदशसर्गं यावत् वर्तते । द्वयोरपि भागयोः अयं द्वितीयः स्तरः । प्रथमे स्तरे केवलं भावार्थसहितः आङ्ग्लानुवादः उद्दिष्टः । अस्य महाकाव्यस्य प्रथमः भागः प्रथमसार्गात् दशमसर्गपर्यन्तः २०१९ तमवर्षे विद्यापीठेन प्रकाशितः ।






रघुवंशमहाकाव्यस्य द्वितीयभागं विमोच्य व्याख्यातॄन् डा. शिवरामभट्टमहोदयान् सम्मानयन्तः मान्याः अतिथयः भद्रेशस्वामिचरणाः कुलाधिपतयः कुलपतयः कुलसचिवाः संकायप्रमुखाश्च ।

## Brahmagupta's Kuttaka (Algebra)

– by Venugopal D. Heroor

Āryabhaṭa-I (499) has started a tradition of including in astronomical treatises, separate and full chapters exclusively devoted to mathematics. Brahmagupta devoted two chapters to mathematics in his Brāhmasphuṭa siddhānta. He has called the twelfth chapter as Gaṇitaand the eighteenth chapter as Kuṭṭaka.

The present work Brahmagupta's, Kuṭṭaka [Algebra], contains the Sanskrit text of Kuṭṭakādhyā of Brāhmasphuṭa-siddhānta with Introduction, English translation exposition, notes, along with solution of illustrative examples according to the methods of Brahmagupta, illustrated by Pṛthūdakasvāmi, using modern symbols.




In Kuṭṭaka (algebra), Brahmagupta made a considerable advance surpassing Diophantus (300 A.D.), the Greek algebraist, in the solution of equations involving more than one quantity, in the resolution of equations of a higher order than the second, and, especially, in the complete solution of indeterminate equations of the first degree and partial solution of the second. Brahmagupta also showed extreme ingenuity in the application of algebra to astronomical investigations.

Engineer Venugopal D Heroor has done yeoman service by bringing out the present work,

Readers will definitely find Er. Heroor's present book, Brahmagupta's Kuṭṭaka [Algebra], both charming and exciting as well as enlightening.




**वैयाकरणसिद्धान्तलघुमञ्जूषा** - नागेशभावप्रकाशव्याख्यया सह
व्याख्याकारः - महामहोपाध्यायः पेरिसूर्यनारायणशास्त्री
सम्पादकः - आचार्यः जा. रामकृष्णः

महामहोपाध्यायादिपुरस्कारभाजः ब्रह्मश्रीपेरिसूर्यनारायणशास्त्रिपादाः "नागेशभावप्रकाशः" इत्याख्यां व्याख्यां व्यतन्वन् । प्रकाशतां नीतेऽस्मिन् ग्रन्थे धात्वर्थ-निपातार्थ-प्रातिपदिकार्थ-सुबर्थ-वृत्तिविचाराख्यानां प्रकरणानां व्याख्यानं समुपलभ्यते । सर्वेष्वपि एतेषु प्रकरणेषु मतान्तरनिराकृतिपूर्वकं महाभाष्यप्रामाण्येन वैयाकरणमतमेव सिद्धान्तत्वेन समस्थाप्यत । एतेषां सिद्धान्तानां सारल्येन बोधाय "नागेशभावप्रकाशः" अध्येतॄणां करदीपिकायते ।






वैयाकरणसिद्धान्तलघुमञ्जूषां विमोच्य सम्पादकान् आचार्यान् जा. रामकृष्णमहोदयान् सम्मानयन्तः मान्याः अतिथयः भद्रेशस्वामिचरणाः कुलाधिपतयः कुलपतयः कुलसचिवाः संकायप्रमुखाश्च ।




## महस्विनी

सम्पादकः - आचार्यः कोराडसूर्यनारायणः

राष्ट्रियसंस्कृतविश्वविद्यालयद्वारा महस्विनीनाम्नी काचित् शोधपत्रिका प्रकाश्यते । इयं 'महस्विनी' शोधपत्रिका नानादशकैः समृद्धा विद्वद्वर्याणां सहकारेण समादरणेन च प्रारभत । नानाशास्त्रमयितानि अनुसन्धानात्मकानि पत्राणि अस्यां बाहुल्येन प्रकाश्यन्ते साधु च समाद्रियन्ते। सञ्चिकायामस्यामपि चतुर्दशशोधलेखाः शिष्टाः अर्थशास्त्र-धर्मशास्त्र-योगशास्त्रादिविषयान् उररीकृत्य निबद्धाः विलसन्ति ।







महस्विनीशोधपत्रिकां विमोच्य सम्पादकान् आचार्यान् डा. कोराडसूर्यनारायणमहोदयान् सम्मानयन्तः मान्याः अतिथयः भद्रेशस्वामिचरणाः कुलाधिपतयः कुलपतयः कुलसचिवाः संकायप्रमुखाश्च ।

## शेमुषी

सम्पादकः - डा. शिवरामभट्टः




इयं विश्वविद्यालयस्य वार्तापत्रिका वर्तते । अस्यां विश्वविद्यालयस्य शैक्षिकाः कार्यक्रमाः प्रशासनविवरणं च सचित्रं प्रकाश्यते । जूनमासतः सप्टेम्बरमासपर्यन्तं विहितानां कार्यक्रमाणां सचित्रं विवरणं प्रस्तुतम् । अत्र अन्ताराष्ट्रिययोगदिनस्य विविधकार्यक्रमाः, दूरदर्शने कुलपतिमहोदयानां वार्तासंवादः, विश्वविद्यलयस्य अध्यापकैः प्राप्ताः विविधाः पुरस्काराः, वृत्तपरिस्पन्दः इत्यादयः सचित्रविवरणविशेषाः उल्लिखिताः सन्ति । अस्याः पत्रिकायाः संरक्षकाः विश्वविद्यालयस्य कुलपतयः आचार्याः वि. मुरलीधरशर्ममहोदयाः, प्रकाशकाः कुलसचिवाः कमाण्डर् चल्ला वेङ्कटेश्वरमहोदयाः, सम्पादकः डा. शिवरामभट्टमहोदयः इत्येते वर्तन्ते ।



